पोक्तः आश्रितत्वात्प्रयोगस्येति सूत्रावयवेन श्रुतिवाक्यकृतहानिश्चायं च सिद्धसाध्यत्वकृतो विशेषो न श्रुतिवाक्यकृतविशेषवच्छब्दमात्रनिमित्तः किं तु वास्तवोऽपीति वस्तुधर्मेणेत्यनेनोक्तं कीदृशोऽसौ विशेष इति प्रश्नपूर्वं विवरीतुमाह * कथमिति * प्रतिपदपक्षारिष्टत्वोपपादनस्यानिष्टापत्त्यभिधानार्थत्वेन प्रस्तुतोपयोगं वक्तुमाह * कस्मादिति * कथं नाम्नः फलपदान्वये वह्वदृष्टप्रसङ्गापरिहार इत्याशङ्क्याह * नाम्नश्चेति * ननु सिद्धरूपस्यापि नामार्थस्याश्रयत्वेन निष्पाद्यो धात्वर्थो दृष्टेनोपकरिष्यतीत्याशङ्क्याह * न हीति * विधीयमानस्य धात्वर्थस्य किं चित् समीहितं प्रति साधनत्वं विना विधेरपर्यवसानात्फलार्थं प्रति साधनत्वायोगात्तादर्थ्येन विध्यनुपपत्तेरन्यार्थत्वेनैव विहितस्याश्रयत्वेन ग्रहणात् सत्यप्याश्रयत्वे कश्चिददृष्टो नामार्थस्योपकारो धात्वर्थसाध्योऽस्मिन्पक्षे कल्प्यः स्यादित्याशयः। आश्रयत्वेन धात्वर्थं गृह्णन्नपि नामार्थः साधनत्वेन नापेक्षते येन नामार्थस्य फलान्वये धात्वर्थस्तस्य दृष्टेनोपकुर्यादित्यर्थः। उच्चारणोत्पत्ताविति भाष्यावयवेनोत्पत्तिशब्दमुच्चारणार्थत्वेन व्याख्याय स्वे ऽर्थत्वेन प्रयोगशब्दो वाच्यार्थत्वेन व्याख्यातः। तत्र प्रयुज्यमानशब्दात्कर्मव्युत्पत्तिर्दर्शितेवामाति तस्यार्थस्योच्चारणस्यप्रयोज्यत्वाभावाद्युक्तमानत्वाधिकरणव्युत्पत्तिमाह * प्रयुज्यतइति * प्रयुज्यमानशब्दविषयभूते ऽर्थे रूपोपलब्धिरिति व्याख्यानेन सूचिता प्रयुज्यमानशब्दार्थपरत्वाल्लक्षणयार्थस्य प्रयुज्यमानतेत्याशयः। सूत्रान्तप्रयोगशब्दवत् प्रथमप्युच्चारणार्थतया प्रसिद्धः प्रयोगशब्दो वाच्यार्थतया कस्माद्व्याख्यात इत्याशङ्क्य प्रयोगस्य सप्तम्या रूपोपलब्ध्या ऽऽधारत्वोक्तेर्वाच्यार्थतयाऽश्च तस्या इत्याह * तदाधारैव हीति * उच्चारणे ऽपि निष्पाद्यरूपोपलब्धेर्निष्पन्नरूपतेह विवक्षितेति निष्पन्नशब्देनोक्तं यास्कादिति भाष्येण रूपोपलब्धिपदं स्वार्थरूपाभिप्रायेणान्वयमुखेन व्याख्याय क्रियार्थेभ्योऽभिधानेन व्यतिरेकमुखेन व्याख्यातं तदुभयमपि नामार्थस्य साधनानपेक्षत्वाय निष्पन्नत्वस्य वक्तव्यत्वाद्धात्वर्थस्य साधनापेक्षत्वायानिष्पन्नत्वस्य वक्तव्यत्वाद्युक्तमाशङ्क्याह * ननु त्वन्नत्वइति * निष्पन्नत्वे नामार्थस्य वक्तव्ये स्वार्थिकत्वप्रदर्शनमित्यर्थो दृष्टं कामनामधेयत्वेन नाम्नः फलपदान्वयस्यानापत्त्याप्यापत्तिपरिहारार्थसिद्धरूपार्थत्वाभिधानानर्थक्यापत्तेः द्रव्यगुणशब्दस्याऽप्युपगमे ऽनाशङ्केति सूचयितुं द्रव्यगुणशब्दा इति व्याख्यातं किमर्थं तर्हि नामानीत्युक्तम् इत्यपेक्ष्य सत्यप्रधानानि नामानीति स्मृत्या सिद्धार्थेष्वोपपादनार्थ-

एवं पर्यायत्वाभिधानेन सूचितं, तत्स्पष्टत्वादव्याख्याय तस्मात्तेभ्यः पराकाङ्क्षेति सूत्रावयवव्याख्यानार्थं यत एषामिति भाष्यं सूत्रे नञ्भावादयुक्तमाशङ्क्याध्याहारार्थत्वेन व्याचष्टे * तेभ्य इति * स्वयमन्यवाचित्वेन परशब्दं व्याख्याय प्रधानवाचित्वं भाष्योक्तं व्याख्यातुम् *निष्पाद्यत्वेन चेत्युक्तम्* निष्पाद्यत्वेन प्रधानस्य सतो या साधनाकाङ्क्षा सा न विद्यते निष्पाद्यत्वाभावादित्यर्थः । दूरवाचिना वा परशब्देनैव नञर्थो लभ्यत इत्यन्यथा व्याचष्टे * अथ वेति * भूतत्वादित्यादिसूत्रावयवं नैराकाङ्क्ष्योपपादनार्थत्वेन व्याचष्टे *कुत इति पौनरुक्त्यं परिहरति * स्वरूपेति *

येषा तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥४॥

[1] आख्यातस्वरूपकथनस्य प्रयोजनमाह * आख्यातेति * श्लोकं व्याचष्टे * धात्वर्थस्तावदिति * व्यापारात्मकत्वात्सार्थस्य व्यापारस्य चानुपसंहृतरूपत्वाख्यानिष्पन्नरूपत्वात्स्वभावेनैव साध्यात्मकतेत्याशयः । ननु नामधेयत्वे नाम्नोऽपि साध्यार्थत्वान्निष्पन्नस्य चानुष्ठेयत्वाख्यसाध्यत्वायोगात्फलपदान्वयः प्रसज्येतेत्याशङ्कते *नन्विति * नामधेयत्वस्य धातुसामानाधिकरण्याभिधानत्वात्फलपदान्वये च सामानाधिकरण्याभावान्नामधेयत्वं न स्यादिति परिहरति * नेति * अन्योत्पादानुकूलार्थाभिधायित्वेन साध्यसाधनेतिकर्तव्यताकाङ्क्षोत्थानसूचनार्थं ते भावयन्ति इति वक्तव्ये तान्याख्यातानीत्यभिधानात् सूचितम् । परिहारान्तरमाह *अपि चेति* श्लोकं व्याचष्टे * यद्यपीति * ननु सिद्धस्वरूपतयाभिधानेऽपि वस्तुतः साध्यत्वात् साधनाकाङ्क्षानुष्ठेयत्वनिर्वाहार्थं च फलाकाङ्क्षा भविष्यतीत्याशङ्क्याह * अभिधानेति * यागादिशब्दोच्चारणेऽपि साध्यत्वानुरक्ताकाङ्क्षानुपलब्धेरभिधानकृतैवाकाङ्क्षेत्याशयः । तस्मात्तेभ्यः प्रतीयेतेति तस्माच्छब्देन साध्यत्वोपपादितसाधनाकाङ्क्षावशान्नामार्थस्य धात्वर्थान्वये दृष्टार्थत्वं हेतुत्वेन परामृष्टमिति सूचयितुमुपसंहरति * तस्मादिति * अनेन च भव्यार्थास्त इति भाष्यमपि तात्पर्यतो व्याख्यातम् । उच्चारणाख्यप्रयोगकाले स्वार्थे प्रयोगो न विद्यत इत्युक्ते प्रयोगकाले प्रयोगनिषेधायोगाद्विशेषणभूतेऽर्थे निषेधावतारात्प्रयोगकालेऽर्थो न विद्यत इत्यर्थप्र- ३५९।१

१ सामानाधिकरण्याभावादिति १ पु॰ पा॰ ।

तीतेः स्पष्टत्वात्तद्व्याख्यानार्थं भाष्यं न व्याख्यातम्। अदृष्टकल्पनाल्परवबहुत्वकृतेन विशेषेण धात्वर्थफलवत्त्वसिद्धेराश्रितत्वादिति हेत्वानर्थक्यमाशङ्क्य किं चेति भाष्येण हेत्वन्तरसमुच्चयार्थत्वेन व्याख्यातम्। पूर्वोक्ताद्विशेषाद्वेतवुक्तस्य विशेषस्य विवेकमाह * किं चेति * एक पदोपादानाद्धात्वर्थस्य प्रत्यासत्तिलक्षणया श्रुत्या भावनान्वयः नामार्थस्य वाक्येनेत्यर्थः। धात्वर्थानपेक्षस्य नामार्थस्य भावनाननुरञ्जकत्वाद्वस्तुतो ऽपि धात्वर्थस्यैव प्रत्यासत्तेर्न शब्दग्रहणाद्वास्तवत्वानिवृत्तिः। अत्र भाष्यकृतो तेषामाख्यातानां प्रयुज्यते ऽस्मिन्निति व्युत्पत्त्या प्रयोगशब्दवाच्यः प्रतिपाद्यो ऽर्थो धात्वर्थानुरक्तभावनाख्यः पुरुषेणाश्रित इति सूत्रावयवस्वरूपं व्याख्याय तदुपपादनार्थं पुरुषान्वितभावनाख्यातैरुच्यत इत्युक्तेन व्याख्यातेषु पुरुषानुपादानात्कथं तदन्वयावगतिरित्याशङ्क्य पुरुषस्याख्यातैर्भावनायां नियोगाद्वाक्षेपलभ्यत्वमुक्त्वा तथापि धात्वर्थस्य फलप्रदान्वयः कथमित्याशङ्क्याक्षिप्तस्य पुरुषस्य फलपक्षाद्विशेषप्रतीतेराख्यातोपात्तस्य धात्वर्थस्य भावनाद्वारा पुरुषान्वयः प्रतीयते न तु द्रव्यादेर्नामार्थस्येत्युक्ते तस्यापि भावनाद्वारान्वयो भविष्यतीति सर्वेषां भावो ऽर्थ इति सूत्रोक्तं चोद्यमनुभाष्य श्रुतिवाक्यविशेषाभिधानेन परिहृतं तत्संक्षेपतो व्याचष्टे * पुरुषेति * भावनायां पुरुषस्य नियोज्यत्वोपपादनार्थं तद्व्यापारतोक्ता धात्वर्थावच्छिन्नभावनानुष्ठानाद्वेतुस्तदुपश्लेषो भावनायाः पुरुषेणापेक्षित इत्युक्तम्। दर्शपूर्णमासाभ्यामिति नाम्नः फलपदान्वये दर्शकालः पौर्णमासकालश्चेति भाष्ये कालयोर्वाचकत्वाभिधानान्नामधेयविचारे ऽनुदाहृतत्वाद्धात्वर्थस्यापि फलान्वये गुणविधित्वाशङ्काप्रसक्तेस्तन्निरासार्थं दर्शपूर्णमासकालान्वितस्यैवाग्नेयादियागस्य विहितत्वात्तत्प्रख्यन्यायेन लक्षणया यागनामधेयत्वाभिधायकं यद्वा यागेनेति भाष्यं स्पष्टत्वान्न व्याख्यातम्।

॥ अथ अपूर्वस्यास्तिताधिकरणम् ॥ २ ॥

## चोदनापुनरारम्भः ॥ ५ ॥

कथं पुनरित्यादिभाष्येण शङ्कानिरासार्थत्वेनैतत्सूत्रमवतारि-
तमिति दर्शयितुमाह * सूत्रसिद्धान्तमिति * अपूर्वाभावे कथं ऽपूर्वं
प्रतीयते इति प्रतिपत्त्युपायविशेषविचारायोगात्तत्प्रतिपादनापेक्षायां
सूत्रप्रवृत्तेरिति भाष्यतात्पर्यमित्यर्थः। चोदनेत्यपूर्वं ब्रूम इत्यादिभा-
२६०।१ ष्योक्तं सूत्रार्थं तात्पर्यतो व्याचष्टे * फलार्थेति * चतुर्थ्युक्तफला-
र्थत्वं तच्छब्देन परामृष्टं श्लोकं व्याचष्टे * यद्यपीति * पूर्वग-

रकरैरपूर्वाभावे ऽपि कर्मफलसम्बन्धोपपत्तेरपूर्वस्य निष्प्रमाणकत्वा-
द्भावार्थाधिकरणस्य न कोऽयः फलोत्पादावगतिरित्येतावति पर्यव-
सानोपपत्तेः सूत्रस्य चारम्भकं प्रवर्त्तकं वाक्यं चोदनेति चोदनास्व-
रूपकथनार्थतयापि व्याख्यातुं शक्यत्वान्नेदं सूत्रमपूर्वसद्भावाभिधा-
नार्थमित्युक्तं तद् दूषयितुमुपन्यस्यति * अत्रेति * केन चित्प्रमाणे-
नानवगतपूर्वकत्वादवयवार्थमनुगतमस्य नामेति बहुव्रीहिरुपहासार्थः
श्लोकं व्याचष्टे * घस्त्विति * प्रत्यक्षाप्रवृत्तिं तावदुपपादयति * त-
त्रेति * आदिशब्देन लोकसिद्धेन्द्रियविषयमात्रग्रहणम् । अनुमाना-
प्रवृत्तिमुपपादयति * नापीति * प्रत्यक्षसूत्रे सत्ता च नानुमानेन
कस्य चित्सम्प्रतीयत इत्यत्रोक्त शब्दाप्रवृत्तिमुपपादयति * पदेति *
श्लोकं व्याचष्टे * आगमिकत्वमिति * उपमानाप्रवृत्तिमुपपादयति
* न चेति * प्रत्युतासत्त्वपर्योपमानं प्रवर्त्तते इत्युपहासार्थमाह ३६१।५
* कामामिति * अर्थापत्त्यप्रवृत्तिमुपपादयति * अर्थापत्त्यापीति *
सिद्धान्ताभिमतश्रुतार्थापत्तिनिरासार्थम * फलेरयुक्तम् * श्लोकं
व्याचष्टे * दृष्टार्थापत्तिरिति * शब्दप्रामाण्यानादरेण दृष्टार्थाप-
त्त्यवतारस्तथा चेश्वरेच्छादेरपि वैचित्र्यहेतोः पराभिमतस्यापि श-
ब्देनोपादानम। ननु श्रुतायाः फलयागादिसङ्गतेरपूर्वं विना ऽनुपपत्तेः
श्रुतार्थापत्तिनिराकर्त्तुमशक्येत्याशङ्क्याह * श्रुतार्थापत्तिरिति * अ-
पूर्वे तु न कदा चित्फलसाधनत्वेन सम्भाव्यत इति व्यतिरिक्ताभि-
धानात् सम्भवित्वाभिधानायान्यथानुपपत्तेः कथं चित्परिहारा-
सम्भवः शाब्दंवाचिना प्रत्यक्षशब्देनोक्तमिति न कथं चिदपीत्यनेन
व्याख्यातंान केवलमन्यथानुपपत्तेः कथं चित्परिहारासम्भवादेव द्व्य-
र्थविषयत्वस्य सम्भवित्वं किं॥सामान्यतः प्राप्तत्वादपीत्यपि चेत्यनेनो-
क्तम।द्व्येष्वप्यवदालम्भसक्तैरित्यर्थ।द्व्याख्याविशेषे ऽप्यवद्देयसामान्य-
वृत्तेः श्रुतहान्यभावः सामान्येन च विशेषाक्षेपादश्रुतापत्त्यभावः ।
सम्भाव्यमानस्याविरोधिनश्च श्रुतार्थापत्तिविषयत्वात् श्रुतार्थापत्ते-
रप्यपूर्वो न प्रवर्त्तन इति भावः । तत्रापूर्वाभावे ऽपि श्रुतसाध्यसा-
धनसम्बन्धानुपपत्तिपरिहारः कथं विनष्टं साधयतीत्यादिनाशङ्कापूर्व-
मुपपादयिष्यमाणमभिप्रेत्यापूर्वस्यासम्भावित्वं तावदाह * अपूर्व त्वि-
ति * अनेनैव ग्रन्थेन पाक्षिकप्रसक्तेरपि निरस्तत्वात्पारिशेष्यसिद्धिरू-
पा तावदर्थापत्तिरनाशङ्क्यैवेति यतो ऽन्येत्यनेनोक्तमानन्तु प्रसक्त्यभावे
ऽप्यन्यनिवृत्तिमात्रेण परिशेष. कस्मान्न सिद्ध्येदित्याशङ्क्याह * य-
दीति * श्लोकं व्याचष्टे * न हीति * श्रुतसाधनसम्बन्धविरो-

१ व्यतिरिक्ताभिधानादिति २ पु० पा० ।

धि चापूर्वमित्याह * अपि चेति * न च साध्यसाधनत्वाकाररहितं
३६२।१ तत्कल्पयितुं शक्यं प्रमाणाभावादित्याह * न चेति * कथं तर्हि
श्रुतसाध्यसाधनसम्बन्धासिद्धिरित्याशङ्क्याह * तेनेति * एतदे-
वाशङ्कापूर्वकमुपपादयति * कथमिति * न च स्थायित्वं फलसा-
धकत्वे प्रयोजकमाकाशादिष्वपि प्रसङ्गादित्याह * अपि चेति *
एतदेव विवृणोति * यदि चेति * ननु शास्त्रेण यागादेः फल-
साधनत्वावसायाद्विनष्टत्वेन च तस्य साक्षात् साधनत्वायोगात् स्था-
यिसम्बन्धिद्वारा साधनत्वसिद्धये ऽपूर्वकल्पनेति स्वयमेवाशङ्क्य
निरस्यति * अथेति * तदेव व्याचष्टे * यदीति * अतिक्रान्तो
ऽतीतो विनष्टो यागो यस्येति विग्रहः । नन्वात्मनः स्वरूपेणावैचि-
त्र्याद्यागादेश्चातिक्रान्तस्यासत्त्वेनावच्छेदकत्वायोगात् फलवैचित्र्य-
हेतुत्वं न स्यादित्याशङ्क्य यागादिविनाशस्य तर्हि प्रतियोगियागा-
दिनिरूपणाधीननिरूपणत्वादसत एव घटादेर्विनाशप्रतियोगित्वद-
र्शनात्तद्भेदापादितवैचित्र्यस्य फले ऽपि वैचित्र्यहेतुत्वोपपत्तेः स्थायि-
नः सम्बन्धिनश्च साधनत्वं भविष्यतीति पक्षान्तरमाह * यद्वेति *
श्लोकं व्याचष्टे * विनाशिनीति * ननु विनाशोत्तरकालीनस्यापि
फलस्य कथं तज्जन्यत्वावधारणेत्याशङ्क्य यत्र यत् प्रतीत्य प्रतिगम्य
प्राप्य यस्मिन्सतीत्युक्तमानन्तु कर्मविनाशान्वितस्यात्मनः साधनत्वस्य
न चातिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिरित्यादिना निश्चेयमा-
नत्वात् स्वतन्त्रस्याभावस्य क्वचित्साधनत्वादर्शनाच्चेह साधनत्वक-
ल्पनेति स्वयमेवाशङ्क्य निरस्यति * स्यादेतदिति * श्लोके यत् तु-
ष्ट्यादिफलोत्पत्तिनिमित्तस्य भोजनादेः क्रियात्व धर्मो दृष्टस्तदतिक्र-
मस्योभयपक्षसाम्यात् तत्फलस्याविशेषेणाभावस्यैव तन्निमित्तत्व-
कल्पनौचित्येत्यर्थः । विनष्टस्य कर्मणः साधनत्वायोगे कालान्तर-
भाविफलसाधनत्वस्यापूर्वकल्पकस्य शास्त्रार्थस्यानवधारणात्कथम-
३६३।१ पूर्वकल्पनेत्याह * किं चेति * श्लोकं व्याचष्टे * क्रियेति * न-
न्वनन्तरफलानुपलब्धेः शास्त्रप्रामाण्याच्चावश्यं फलोत्पत्त्यवसाया-
त्कालान्तरभाविफलसाधनत्वं भविष्यतीत्याशङ्कते * तत्रेति * अ-
नुष्ठानात्प्रागनन्तरानुत्पत्तेर्ज्ञातुमशक्यत्वादुत्तरकालं च शास्त्राव्या-
पाराच्छास्त्रान्तर्गतिनापूर्वस्य सम्भवतीति परिहरति * तदिति *
श्लोकं व्याचष्टे * न हीति * ननु योग्यत्वावधारणाधीनत्वाद्वा-
क्यार्थप्रतीतेरननुष्ठितस्य च योग्यतायाः प्रमातुमशक्यत्वात्कस्मान्ना-
नुष्ठानोत्तरकालं शास्त्रार्थावधारणेत्याशङ्क्य ज्ञाते वा वचनं न ह्यवि-
ज्ञान्विहितो ऽस्तीति वार्त्तिकसूत्रावयवेनानुष्ठानोत्तरकाले शास्त्रार्था-

पधारणे सत्यत्योन्याश्रयापत्तिः सूचिता कर्मफलकालयोर्वियोगो
विप्रकर्षः प्राक्चापूर्वानपेक्षस्य कर्मणः साधनत्वे निश्चिते पश्चात्तदन्त-
र्भावना शास्त्रविरुद्धेति सूचयितुम् * यद्वेत्युक्तम् * वैगुण्यकल्पनया-
पि वानन्तरानुत्पत्तिसम्भवात् शास्त्राविरुद्धार्थापूर्वकल्पना युक्तेत्या-
ह * अपि चेति * सर्वाङ्गप्रधानसाध्यत्वात्फलस्य कस्मिंश्चित् विगुणे
सति इतरसादुगुण्ये ऽप्यनुत्पत्तिसम्भवं वक्तुं सर्वशब्दः। बहुपुरुषसा-
ध्यत्वाच्चैकाशक्तावपि वैगुण्यापत्तिं कर्तृष्विति बहुवचनेनोक्ता। स-
र्वेषु पदार्थेषु बहवः कर्त्तारस्तेषु मध्ये क्व चित्पदार्थे क्व चित्कर्तर्यदृ-
ष्टेरपरिहार्यत्वादित्यर्थः। श्लोकं व्याचष्टे * दृश्यतइति * प्रायेण ता-
वद्वैगुण्यं दृश्यते यत्रापि न दृश्यते तत्रापि शास्त्राविरोधात्तदेव क-
ल्पनीयमित्यर्थः। ननु स्वर्गनरकयोरामुष्मिकत्वेनानन्तर्यायोगात्प्राग-
प्यनुष्ठानादपूर्वद्वारैव तदुत्पत्त्यवधारणं भविष्यतीत्याशङ्क्याह * न
चेति * एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * निरति- ३।४।१
शयसुखदुःखात्मकयोस्तादृशसुखदुःखोपभोगयोग्ययोर्देशविशेषयोर्वा
स्वर्गनरकशब्दवाच्यत्वात्तयोश्चानेन शरीरेण प्राप्त्यसम्भवाच्चानन्तर्यानुप-
पत्तिरित्याशङ्क्यालौकिकयोः सम्बन्धग्रहणासम्भवेन वाच्यत्वायोगा-
त्सूक्ष्माणि वासांसि स्वर्गः चन्दनं स्वर्ग इति च सुखहेतौ द्रव्ये स्व-
र्गशब्दप्रयोगेणाकृतिन्यायाद्विशेषणभूतस्य लौकिकस्य सुखस्य स्वर्ग-
शब्दवाच्यत्वावगतेर्दुःखहेतौ च दारिद्र्ये नरकापरपर्यायदुर्गतिश-
ब्दप्रयोगाद्विष्ठायां च दुःखहेतौ नरकशब्दप्रयोगदर्शनाच्चाकृतिन्याये-
नैव लौकिकदुःखवाचित्वावगतेरानन्तर्योपपत्तिरिति सुखदुःखात्म-
कयोरनेनैव सूचितम्। श्लोकं व्याचष्टे * न हीति * ततश्च स्वर्ग-
नरकयोरप्यानन्तर्योपपत्तेर्न ग्रामादिभ्यो विशेषो ऽस्तीत्युपसंहरति *
इतीति * शास्त्रीयक्रियाजन्यत्वेनापूर्वस्य चेष्टत्वाद्विधिनिषेधाधिकारे च
निषेध्यस्य हननादेर्लौकिकसिद्धत्वेनाशास्त्रीयत्वात् शास्त्रीयायाश्च त-
न्निवृत्तेः फलाभावेनापूर्वानपेक्षत्वाच्च तत्कल्पना युक्तेत्याह * किं
चेति * श्लोकं व्याचष्टे * ब्राह्मण इति * एवं चापूर्वस्य भूतसाध्यसा-
धनसम्बन्धविरोधित्वाद्विनष्टस्यापि च कर्मणस्तत्सम्बन्धिनः पुरु-
षस्य वा विनाशस्यैव वा साधनत्वोपपत्तेः कालान्तरभाविफलत्वान-
वसायाच्चापूर्वस्यासम्भवित्वात्कल्पनानुपपत्तिमुक्त्वा इदानीं भूतसा-
ध्यसाधनसम्बन्धानुपपादकत्वादपि कल्पनानुपपत्तिमाह * कदाचि-
तमिति * यागादेर्हि व्यापारात्मकत्वात् जन्मनैव कार्यारम्भकत्वं यु-
क्तम् अपूर्वस्य त्वव्यापारात्मकत्वान्निर्व्यापारस्य कार्यारम्भकत्वानुप-
पत्तेः। भूतसाध्यसाधनसम्बन्धानुपपादकत्वाद्व्यर्था कल्पनेत्याशय।

स्वर्गनरकोपभोगाय देशान्तरे शरीरस्य प्राप्तिर्लोभोत्पत्त्यपरपर्यायापेक्षिता य चादिशब्दात्पुत्रादेः प्राप्तिरपेक्षिता तत्साधनेनापूर्वं समर्थमित्यर्थः। स्वाश्रयाश्रयाभावेन चापूर्वस्य स्थायित्वायोगाद्दृष्टफलसाध्यसाधनसम्बन्धोपपादकत्वं नास्तीत्याह *न चेति* प्रक्षेपान्तस्य यागस्यापूर्वारम्भकत्वेनेष्टत्वात्प्रक्षेपस्य च द्रव्यवदानाश्रितत्वाद् द्रव्यवदानव्यतिरिक्ते यजमाने ऽपूर्वारम्भकत्वानुपपत्तेर्द्रव्यवदानस्य च विनष्टत्वादपूर्वाश्रयः स्थायी सम्भवतीत्याशयः। वार्त्तिककृन्मते यागस्य पुरोडाशसाध्यत्वे ऽपि सङ्कल्पात्मकत्वेनात्माश्रितत्वाद् द्रव्यवदानप्रक्षेपादीनां हि सर्वेषामिति सिद्धान्तवार्त्तिकदर्शनाच्च पुरोडाशादादीयमानत्वात्पुरोडाशादिशब्देन द्रव्यवदानमेवोक्तम्। अङ्गापूर्वाणामप्येवं न स्थाय्याश्रयः सम्भवतीत्यतिदिशति * एवमिति * अङ्गापूर्वं च प्रधानापूर्वेण सम्बद्धं न वा असम्बद्धत्वे तावन्नोपकारित्वं सम्भवतीत्याह *किं चेति* आराच्छब्देन क्रियासाधनासमवायो ऽभिप्रेतः प्रधानाश्रयात्माश्रितत्वात्प्रधानाश्रयत्वे त्वारादुपकारित्वं विरुध्येतेत्याशयः। श्लोकार्थमुपपादयति * न हीति * सम्बन्धस्तु संयोगाद्यभावादाश्रयाश्रयिभावो वाच्यः अङ्गानां च प्रधानापूर्वसम्बन्धाभावेन तत्समवेतापूर्वोत्पादकत्वायोगात्पारिशेष्यात्पतनप्रतिबन्धलक्षण एवाश्रयाश्रयिभावः परिशिष्यते। न चामूर्त्तस्य पतनप्रतिबन्धकतेत्यत्याह *न चेति* नन्वारादुपकार्यङ्गानां प्रधानापूर्वसम्बन्धाभावेन तत्समवेतापूर्वोत्पादकतायोगे ऽपि सन्निपत्योपकार्यङ्गानां प्रधानापूर्वसाधनाश्रयत्वेन तत्सम्बन्धसद्भावात्तत्समवेतापूर्वोत्पादकत्वं भविष्यतीत्याशङ्क्याह * यदपि चेति * लक्षणार्थत्वेनोपन्यासाद्दस्य व्रीह्यादिद्रव्यमाश्रये तत्समवायिनो ऽपूर्वस्य क्षयादित्यर्थलाभः व्रीह्याश्रितस्याप्यपूर्वस्यावघातेन व्रीहिनाशो ऽन्यत्र तण्डुलादावसत्त्वाच्च तद् द्वारा प्रधानापूर्वोपकारित्वं स्यादित्यर्थः। सन्निपात्यङ्गानां मात्यात्मिकापूर्वमात्रपर्यवसायित्वस्य वक्ष्यमाणत्वात्फलसाधनस्य प्रधानस्य साध्य यदपूर्वं तस्येति व्यधिकरणे षष्ठ्यौ व्याख्येये। नन्वङ्गापूर्वाणां प्रधानापूर्वसमवाये ऽपि प्रधानापूर्वाश्रयात्माश्रितत्वेनैकार्थसमवायात्प्रधानापूर्वोपकारकत्वं भविष्यति फलसाधनत्वयोग्यतासाधनार्थत्वेन च क्रियासाधनांशविशेषाभावात् सन्निपत्योपकारित्वानापत्तेरारादुपकारकत्वाविरोध इत्याशयेनाशङ्कते * अथ

१६५।१ त्विति*प्रधानापूर्वाणामप्यात्माश्रितत्वसूचनार्थापिशब्दः आत्माश्रितत्वे सत्यपूर्वस्य योग्यतालक्षणत्वात्फलभोगयोग्यत्वस्य धात्मनापेक्षणात्पुरुषार्थतापद्येतेति दूषणमाह*एवं सतीति* विधिस्थैकधुनित्वादि-

स्यत्र चान्योन्यसापेक्षाणामङ्गापूर्वाणामुपकारकत्वस्य वक्ष्यमाणत्वा-
दसम्बन्धानां चान्योन्यमापेक्षैककार्यारम्भकत्वलक्षणयौगपद्यायोगा-
त्सोपकारकत्वं सम्भवतीत्याह * अपि चेति * एकोक्तासयोगादिलक्ष-
णान्योन्यसम्बन्धसम्बद्धानामेव ग्रावादीनामेकोखास्यैव धारणाख्य
एककार्यारम्भदर्शनात् सम्बन्धं विनान्योन्यस्यापेक्षैककार्यारम्भक-
त्वलक्षणं यौगपद्यं न सम्भवतीत्याशयः । प्रधानापूर्वाणामप्यन्यो-
न्यापेक्षाणामेकफलसाधनत्वलक्षणं फले यौगपद्यमेकादशाद्ये वक्ष्य-
माणमन्योन्यसम्बन्धभावादेवायुक्तमित्यतिदिशति * एनेनेति *
अतो ऽपूर्वस्यास्मन्मविरवाद्विरोधित्वादनुपपादकत्वाच्च कल्पनानुप-
पत्तेस्तन्निरपेक्षाणामेव प्रधानानां पुरुषार्थसाधनत्वमङ्गानां च प्रधा-
नोपकारसाधनत्वमित्युपसंहरति * तस्मादिति * कृतत्वमात्र-
शब्देन विनष्टस्य कर्मणो ऽतिक्रान्तयागस्य वा पुरुषस्य कर्मविनाश-
स्यैव वा फलसाधनतेति पक्षत्रयमपि संगृहीत, किं चापूर्वं यागादि-
भिरुत्पाद्यते ऽभिव्यज्यते च नोभयथापि सम्भवतीत्याह * न चे-
ति * उत्पत्त्यसम्भवे तावत्प्रश्नपूर्वकं विकल्प्य हेतुमाह * कुत
इति * अङ्गकर्मजन्यस्योपकारापूर्वस्य प्रधानकर्मजन्यस्य च फला-
पूर्वस्यानवयवत्वात्क्रमशो ऽपि तज्जन्मसम्भवित्वं न प्रतीयत इत्यर्थः ।
एतदेवोपसंहरति * एवं तावदिति * ननु यथा स्फोटवादिभिर्नि-
रवयवस्यापि स्फोटस्य क्रमवर्तिभिर्नादैरस्फुटस्फुटस्फुटतरत्वेनाभि-
व्यक्तिरिष्यते तथापूर्वस्य निरवयवस्याप्याग्नेयादिभिः क्रमवर्ति-
भिरस्फुटस्फुटस्फुटतरत्वेनाभिव्यक्तिर्भविष्यतीति द्वितीयकल्पमा-
शङ्क्य दूषयति * न चेति * एतदेव प्रश्नपूर्वमुपपादयति * क-
थमिति * प्रत्यक्षग्राह्यस्यैवार्थस्य लोके ऽभिव्यक्त्यपेक्षादर्शनात्त-
स्याश्चेन्द्रियविषयद्वयान्यतमसंस्कारद्वारदर्शनादप्रत्यक्षत्वाच्चापूर्वे
तदनुपपत्तेर्नाभिव्यक्तिः सम्भवतीत्याशयः । ननु कुलालादिव्यापा-
रैरौतरविलक्षणाप्यभिव्यक्तिः घटादेः सांख्यैरिष्टेत्याशङ्क्य नो लौकि-
कानां * दर्शनइत्युक्तम् * श्लोकं व्याचष्टे * सर्वेति * अपूर्वापे-
क्षयान्तरवन्दः घटादेश्चालोकानन्तरमुपलम्भात् प्रत्यभिज्ञया च प्राक्
सत्त्वावसायात्तदभिव्यङ्क्तेष्यते ऽपूर्वस्य तु यागाद्यनन्तरमप्यनुपल-
म्भात्प्राक् सत्त्वे च प्रमाणासत्त्वाच्च द्वयमप्यभिव्यङ्ग्यत्वकारणमस्ती-
त्याह * यदि चेति * अपरेषां निपुणं मन्यानां मतमुपन्यस्तमुपसं-
हरति * इतीति * असम्भाव्यमानत्वाद्विरोधित्वादनुपपादकत्वा-
दुत्पत्त्यभिव्यक्त्योश्चाभावादिति सर्वथाशब्देनोक्तं न केवलमपूर्वास-
म्भवादस्य सूत्रस्यापूर्वसद्भावप्रतिपादनार्थत्वं ते नेच्छन्ति किं त्वया-

यकत्वादपीत्याह * न चेति * भाष्यकृद्व्याख्यादूषणमुपसंहरति
* इतीति * प्राभाकरपक्षकार्यनियोगापरपर्यायस्वतन्त्रापूर्वाभ्युप-
गमे परोक्ता दोषाः स्युर्नास्मदभिमतशक्तिरूपाभ्युपगम इति भाष्यकृ-
द्व्याख्यानमभिधातुमुपक्रमते * अत्रेति * विग्रहवद्देवेति शरीरव-
त्त्वं स्वातन्त्र्येण कार्यारम्भकत्वमुपमानेनोपलक्षितम् । अङ्गकर्मभ्यः प्राक्
फलोत्पादनायोग्यस्य प्रधानकर्मणः फलोत्पादनयोग्यता प्रधानकर्म-
भ्यः प्राक् फलोपभोक्तृत्वायोग्यस्य पुरुषस्य फलभोक्तृत्वयोग्यतेत्य-
र्थः । कर्मजन्यत्वं यत्तु कर्मभ्यः परैरुक्तं लौकिकर्मजन्यया यो-
ग्यतया अपूर्वस्यानिवृत्त्यर्थम् * शास्त्रेत्युक्तम् * श्लोकं व्याचष्टे
* प्रधानेति * सदुपलम्भकप्रमाणाभावेनापूर्वस्यासत्त्वं यदुक्तं त-
३६३।१ दनुभाषणपूर्वकं निरस्यति * यच्चेति * सर्वप्रमाणाभावे सत्य-
भावः स्यान्न कतिपयप्रमाणाभावमात्रेणेत्याशयः । न नु प्रत्यक्षाद्य-
प्रवृत्तौ शशशृङ्गवदभावनिश्चयात्तद्विरोधेन श्रुतार्थापत्तेरप्यप्रवृत्त्यु-
पपत्तेः कथमन्यप्रवृत्तिरदोष इति स्वयमेवाशङ्क्याह * किमिति *
प्रमाणान्तरायोग्यत्वादप्रवृत्त्या नाभावनिश्चय इत्याशयः । नन्वेवं
सत्यपूर्वस्यानागमिकत्वात्तद्द्वारस्य श्रेयःसाधनत्वस्यागमिकत्वं न
स्यादित्याशङ्क्याह * शब्देति * श्रुतशब्दैकदेशभूतशब्दकल्पकत्वेन श-
ब्दैकदेशभावाच्छ्रुतार्थापत्तिरप्यागम एवेत्यर्थः । विवक्षितविशिष्ट-
वाक्यार्थप्रतिपादनाशक्तेः श्रुतशब्दमात्रस्यापरिपूर्णत्वसूचनार्थः स्वा-
र्थशब्दः । शब्दैकदेशत्वमेवोपपादयितुमुपक्रमते * येनेति * ननु
विनष्टाविनष्टकारणसाधारणी शक्तिः कार्यकारणनियमसिद्ध्यर्थं
कल्प्यमानापि क्रियाजन्यत्वाभावान्नापूर्वशब्दाभिधेयेत्याशङ्क्याह
* नियोगतश्चेति * शक्तिकल्पनावश्यकत्वे वक्तुमेतदुक्तं वस्तुत-
स्त्वत्र कर्मफलसम्बन्धचोदनायामतीतानामेव कर्मणां जन्यैवा-
तिरेष्टव्येत्यर्थः अनन्तरफलोत्पत्तावप्यावश्यकत्वं नियोगतश्चेत्यने-
नोक्तम् । एतदेव प्रश्नपूर्वकमुपपादयति * कुत इति * श्लोकं व्या-
चष्टे * यदेव हीति * केवलस्यापि दर्शस्यानेककर्मात्मकत्वाच्छ-
३६७।१ क्तिं विना साहित्यानुपपत्तेः * तदन्यं चेत्युक्तम् * यदा च शक्तिं
विना भूयसां यौगपद्यं न सम्भवति तदानन्तरफलोत्पत्तावपि सर्व-
कर्मान्ते फलोत्पत्तेरभ्युपगन्तव्यत्वाच्छक्त्यनङ्गीकरणे चानन्तर्यवि-
शेषेणैकस्यैव साधनत्वापत्तेः शक्तिद्वारा यौगपद्यं सर्वकर्मणां सा-
धनत्वव्यवहारायाङ्गीकार्यमित्याह * नियोगतश्चेति * सर्वमेतद्भ-
द्वावाक्येन द्रढयति * तथा चाहेति * सर्वपदार्थानां कार्यारम्भा-
न्वयव्यवहाराङ्गत्वस्य शक्तिद्वारत्वात्प्रोक्षणादिपदार्थस्वरूपे द्रव्या-

स्थिरत्वादन्यदेशे विनष्टत्वाच्चान्यकाले ऽपि सञ्चारिस्थायिशक्ति-
द्वारा व्यवहारः सिद्ध्यतीत्यर्थः । नन्वविनष्टस्य कर्मणः शक्तिरलौकि-
कीत्याह * लौकिकं चापीति * कालान्तरे यस्योद्गतिरिति विग्रहः
श्लोकं व्याचष्टे * यान्यपि चेति * क्रियाजन्यकार्योत्पत्त्यनुकूलादृ-
ष्टातिशयात्मकत्वात् संस्काररूपतापूर्वस्य संस्कारशब्देन सूचिता
ननु लोके प्रमाणान्तरानुसारात्संस्कारात्मकशक्तिकल्पनं युक्तं वेदे
तु शास्त्रैकसमधिगम्यत्वात्तस्य चानुष्ठानात्प्रागेव प्रवृत्तेस्तदा च फ-
लस्य कालान्तरीयत्वानिश्चयाच्चापूर्वाख्यसंस्कारात्मकशक्तिकल्पना
युक्तेत्याशङ्कां निरस्यन् श्रुतार्थापत्तिप्रमाणकत्वमपूर्वस्योपसंहरति *
तेनेति * फलस्यानेकाङ्गप्रधानसाध्यत्वात्तेषां च क्षणिकत्वेन स्वरूप-
साहित्यायोगात्फलस्यानन्तरोत्पत्तावपि साहित्यसिद्ध्यर्थं शक्तिक-
ल्पनानुष्ठानात्प्रागप्युपपन्नेत्याशयः । एवं स्वपक्षसाधनमुक्त्वा इदा-
नीं परोक्तानि दूषणानि परिहरिष्यन्नपि च यदि तावदित्यनेनोक्तं
श्रुतसाध्यसाधनसम्बन्धविरोधं तावदनुभाषणपूर्वकं परिहरति *
यदीति * श्लोकं व्याचष्टे * यदि हीति ननूदकाहरणसाधनघट- ३६८॥
साधनस्यापि कुलालस्योदकाहरणसाधनत्वाप्रसिद्धेः । कथं यागो-
त्पादितया शक्त्या साधितस्य फलस्य यागः साधनमित्याशङ्कानिरा-
सार्थत्वेन द्वारशब्दं व्याख्यातुम् * सर्वेत्युक्तम् * यथा काष्ठादेर्ज्व-
लनाद्यवान्तरव्यापाररूपद्वारापेक्षत्वे ऽपि पाकादौ साधनत्वाविघा-
तस्तथा संस्कारात्मकद्वारापेक्षत्वे ऽपि साधनत्वाविघात इति सूच-
यितुं व्यापारशब्दः । नन्वपूर्वस्य व्यापारात्मकतानेनोक्ता व्यापारत्वे
ऽस्य स्थायित्वानुपपत्तेः । शक्तिसंस्कारत्वोक्तिविरोधापत्तेश्च का-
र्योत्पत्त्यनुकूलो ह्यदृष्टो ऽतिशयः सिद्धरूपः शक्तिशब्दवाच्यः सामा-
न्यतः प्रसिद्धस्तद्विशेषस्त्वागन्तुकः संस्कारशब्दवाच्यः प्रसिद्धो न
व्यापारात्मकः साध्योद्देशप्रवृत्तकर्तृव्यापारव्याप्यत्वाद्व्यवहितस्या-
पि यागस्य साधनत्वाविघात इत्याशयः । अथ चेत्यनेन सर्वस्य द्र-
व्यादेरवस्थान्तरापत्त्यपेक्षत्वे ऽपि साध्यत्वाविघातदर्शनात् स्वर्गादेः
शक्त्याख्यापूर्वात्मकावस्थान्तरापत्त्यपेक्षित्वे ऽपि साध्यत्वाविघाता-
भिधानार्थत्वेनोत्तरार्द्धं व्याख्यातम् । उपभोग्यानुपभोग्यावस्थे स्थूल-
सूक्ष्मशब्दाभ्यामभिप्रेते यदा च स्थाय्यपूर्वं शक्त्यात्मकत्वात्कर्मफ-
लाभ्यामनत्यन्तभिन्नं तदा फलं भवन्नावयेदनेनेत्थमिति त्रयाणामपि
भावनांशानां यौगपद्याभिधानमपि कर्मफलकालयोरविच्छेदादुपप-
न्नं भवतीति सूचयितुमाह * एतावानिति * परिहारद्वये ऽपि वृ-
द्धसम्मतिमाह * आह चेति * ज्वलनक्रियाद्वारा पक्तव्यमिति द्वार-

निर्देशोक्तिः सर्वसाधनानां द्वारापेक्षाप्रदर्शनार्था साध्यस्यावस्थान्तरापेक्षायामुत्तरार्द्धेन दृष्टान्तोऽभिहितः । यत्त्वपूर्वं विनापि कर्मफलयोः साध्यसाधनसम्बन्धानुपपत्तिपरिहारोपपत्तेर्नापूर्वं कदा निष्फलसाधनत्वेन सम्भाव्यतइत्युक्तं तदनुभाषणपूर्वकं निरसितुमुपक्रमते * यस्त्विति * यदि शास्त्रादेवावगम्यते किं भवतो विरुध्यत इत्यनेन विनष्टस्यापि कर्मणस्साधनत्वोपपादनेनानुपपत्तिपरिहारमुक्तम् नायत्यदनपूर्वं निरस्यति * कुत इति * न सम्भावितं सामर्थ्यरूपेण स्थायित्वं यस्येति विग्रहः । श्लोकं व्याचष्टे *नूनमिति * एतद्देशोपसंहरति * तस्मादिति * अवधारणाप्यपूर्वस्यानुष्ठानात्प्रागेव सिद्धा किमुत सम्भावनेत्यर्थः । यदपि यद्युरेवात्मयागैः सद्भूतस्येत्यनेनातिक्रान्तयागस्य साधनत्वोपपत्तेरपूर्वस्यासम्भवित्वमुपपादितं तदपि निरस्यति * न चेति * श्लोकं व्याचष्टे * यदि हीति * अतिक्रान्तानतिक्रान्तयागयोरिति बहुव्रीहिणा अतिक्रान्तानतिक्रान्तयागपुरुषविशेष इति मध्यमपदलोपीसमासो व्याख्यातः । अविशेषमेवोपपादयति * आत्मत्वमिति * नन्वात्मत्वाविशेषेऽपि विनष्टयागे पुरुषे स एष यज्ञायुधी यजमान इत्यादिप्रयोगदर्शनेन यजमानत्वस्य भावादकृतयागे चाभावाद्विशेषोऽस्तीत्याशङ्क्याह * यागत्वमपीति * अयं भावः यागाश्रितं वा रूपं यजमानत्वेनाभिमतं यागविषयं कर्तृत्वमात्रं वा तत्राद्ये कल्पे यागरूपस्य विनष्टानुत्पन्नस्येनोभयत्रासरूपतया तुल्यत्वादविशेष इति स्वरूपनिष्कर्षार्थभावप्रत्ययान्तेन यागशब्देनोक्तम्।यजमानशब्दप्रयोगस्तु भूतगत्या भविष्यतीति द्वितीय कल्पे निरस्यति *न चेति* यथा क्रियारहितस्यानुत्पन्नक्रियस्य निर्व्यापारत्वात्कर्तृत्वं नास्ति तथौदासीन्याख्यमवस्थान्तरं प्राप्तस्य विनष्टक्रियस्यापीत्यर्थः । कर्तृशक्तिस्तु सर्वदा सद्भावान्न विशेषादिकेति स्वयमेवापङ्क्याह * क-
६९।१ र्त्रिति * उक्तेन च प्रकारेणातिक्रान्तानतिक्रान्तयागयोः पुरुषयोर्विशेषाभावे शुद्धस्य पुरुषस्य साधनत्वापत्तेस्तस्य चावैलक्षण्यात्फलवैलक्षण्यं न स्यादित्याह * अपि चेति * ननु विशेषान्तराभावेऽप्यतिक्रान्तयागत्वमेव विशेषो भविष्यतीत्याशङ्क्याह * तथेति * अतिक्रमस्य विनाशस्य कार्यानुपयोगित्वेनोपलक्षणमात्रार्थत्वाद्यागान्तरातिक्रमे चोपलक्ष्ये पुरुषे विशेषाप्रतीतेः फलविशेषासिद्धिरित्याशयः। एकयागगतप्रयोगाल्पत्वबहुत्वेऽप्येत दोषमतिदिशति * एतेनैवेति * फलविशेषाभावत्वेन निरस्ता इत्यर्थः । कर्तुश्चाव्यातवाच्यत्वे सति प्रकृत्यर्थस्य यागस्य तद्विशेषणत्वप्रतीतेर्विनष्टस्य च का-

No 53 ] [ *Price Rupee One*

THE

# CHOWKHAMBA SÂNSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

# न्यायसुधा ।

## तन्त्रवार्तिक टीका भट्टसोमेश्वरविरचिता ।

## NYAYASUDHA

A COMMENTARY ON TANTRAVARTIKA

BY

PANDIT SÔMESHWARA BHATTA

EDITED BY

PANDIT MUKUNDA SHASTRI

*of the Government Sanskrit-College Benares*

FASCICULUS VII

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK DEPOT

BENARES

AGENT —OTTO HARRASSOWITZ LEIPZIG

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS

BENARES

1902

र्थानुपयोगित्वात्प्रमेयान्तर्भूतव्यावर्तकत्वे लक्षणाविशेषणत्वानुपपत्तेरुपलक्षणत्वमात्रकल्पनयातिक्रान्तयागस्य पुरुषस्य साधनत्वं सम्भाव्येत तस्य कर्त्रधिकरणे निषेत्स्यमानत्वाद्यागस्य पुरुषोपलक्षणत्वानुपपत्तेः शुद्धस्यैव पुरुषस्य साधनतापत्तेः फलनानात्ववैचित्र्ये न युज्येते यद्येत्याह * कर्त्रिति * ननु विनष्टस्य यागस्य वैलक्षण्यानापादकत्वे तज्जन्यस्यापूर्वस्यापि वैलक्षण्यानुपपत्तेर्नो वैलक्षण्यापत्तेस्त्वत्पक्षे ऽप्येतौ दोषौ तुल्यावित्याशङ्क्याह * यस्य त्विति * कार्यकल्प्यत्वाद्यथाकार्यं विलक्षणमेव तत्कल्प्यत इत्याशयः । यथा च सकृदतिक्रान्तयागस्य कर्तुः फलसाधनस्य फलान्तरोत्पादनकाले ऽपि भावाद् बहुप्रयोगानुष्ठानानर्थक्यं तथातिक्रान्ताङ्गस्यापि कर्तुः कर्मोपकारित्वाभ्युपगमे सकृत्कृतेष्वङ्गेषु श्रुतिक्रान्ताङ्गस्य कर्तुः कर्मान्तरकाले ऽपि भावात्कर्मान्तराणामप्युपकारसिद्धेः पुनरनुष्ठानानर्थक्यमित्याह * किं चेति * कुसूलमध्यगतस्य धान्यस्य धान्यान्तराद्यवच्छेदरत्वदर्शनादङ्गमध्यगतत्वेनाङ्गावच्छिन्नतोक्ता यथा प्रधानावच्छिन्नः कर्ता फलसाधनं तथोपकारको ऽप्यङ्गावच्छिन्नः कर्तैव वेदिष्यते ततः प्रकृतौ कृतैरङ्गैर्विकृतावपि प्रसङ्गेनोपकारसिद्धेर्विकृतावङ्गानां प्राप्तिर्न स्यादित्यर्थः । श्लोकं व्याचष्टे *प्रयाजादीनामिति* उपकार्यभेदे ऽपि तावदन्यार्थसिद्धोपकारसद्भावे ऽप्यन्यो नापेक्ष्यते इह तूपकार्यमप्यभिन्नमिति सोऽपि चेत्यनेन सूचितम् । नन्वङ्गानामपूर्वार्थत्वस्य वक्ष्यमाणत्वात्कथं कर्तुरुपकार्यतेत्याशङ्क्य *अपूर्वाभावादित्युक्तम् * प्रयाजादिगतस्यातिक्रान्तप्रयाजादिकर्तृजन्यस्योपकारस्य सद्भावेनान्यार्थाङ्गकृतस्योपकारस्येतरत्रापि सन्निधानाविशेषरूपप्रसङ्गलक्षणसद्भावात्तस्य कृतप्रयाजादेः पुरुषस्य न पुनरङ्गान्यनुष्ठातव्यानीति कर्तृपक्षाङ्गीकरणात्तेन नानुष्ठातव्यानीत्यर्थः । ननु तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तदर्थस्याविशिष्टत्वादिति द्वादशाध्यायाधिकरणसिद्धान्तसूत्रे तन्त्रमध्यविधाननिबन्धनत्वेन प्रसङ्गस्य वक्ष्यमाणत्वात्कथमिह तदभावे प्रसङ्गः स्यादित्याशङ्क्य * विनापीत्युक्तम् * अन्यार्थाङ्गकृतस्योपकारस्यान्यत्रापि सन्निधानाविशेषस्तदर्थस्याविशिष्टत्वादित्यनेनोक्तः । तन्त्रमध्यविधानस्य फलं तत्त्विह न तन्त्रमध्यविधानं विनाप्युपकारस्यात्मनो विततत्वाल्लुप्यत इत्यर्थः । को ऽननुष्ठाने दोष इत्याशङ्क्याह *तत्रेति* ननु पश्चार्धमनुष्ठितैर्विघ्नादिभिर्ब्राह्मणतर्पणान्तैः सर्वैरङ्गैः सम्पाद्यस्योपकारस्याद्याङ्गानुष्ठानेनोपक्रान्तस्यान्याङ्गाननुष्ठानाद्यागसमाप्तेस्तन्मध्ये[1] ऽनु-

[1] अनुपपन्नं मीत २ सू० पा० ।

ष्ठीयमानेन पशुपुरोडाशेनैकदेशकालकर्तृकत्वात्प्रसङ्गेन तादर्थ्यमपि युक्तं, विकृतेस्तु प्रकृतिप्रयोगबहिर्भावात्प्रकृतौ कृतस्योपकारस्य विकृत्या सहैकदेशकालकर्तृत्वानुपपत्तेस्तादर्थ्यमयुक्तमित्याशङ्कते * न त्विति * प्रकृतौ कृतानां प्रयाजादीनां विकृत्या सह कालभेदादेतत्प्रयाजाद्युपकृतमात्मरूपं न विकृतौ प्रसङ्गेनोपकरोतीत्यर्थः । पश्वर्थस्यापि प्रयाजानुयाजादेः पुरोडाशप्रयोगे ऽनुपक्रान्ते समाप्ते वा ऽनुष्ठानाद्भिन्नकालस्यापि प्रासङ्गिकत्वोपकारकत्वं दृष्टमित्याशङ्क्य * अत्यन्तेत्युक्तम् * पश्वर्थप्रयाजादिप्रयोगस्य पुरोडाशप्रयोगाद् बहिर्भावे ऽपि पुरोडाशप्रयोगस्य तदन्तर्भावेन नात्यन्तं कालभेदो ऽस्तीत्याशयः । विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादिति द्वादशाधिकरणसूत्रे पाशुकानां प्रयाजानुयाजानामेकादशसंख्यत्वेन पौरोडाशिकेभ्यः पञ्चत्रिसंख्येभ्यो ऽनुयाजानां च पृषदाज्यद्रव्यकत्वेन शुद्धाज्यद्रव्यकेभ्यः पौरोडाशिकेभ्यो गुणतो विकृतत्वात्तिष्ठत्पशुकालत्वेन च पाशुकानां प्रयाजानां पौरोडाशिकेभ्यः सन्नहविष्कालेभ्यः कालतो विकृतत्वादनुष्ठानभेदः स्यादित्याशङ्कानिरासार्थं गुणकालविकारे सत्यप्यर्थस्योपकारस्याविकृतत्वान्नानुष्ठानभेद इत्यभिधानेनास्यापि चोद्यस्योत्तरमुक्तं भवतीत्याह * वक्ष्यतीति * नन्वेतदेककालोपकारविषयत्वात्कथं कालभेदचोद्यस्योत्तरमित्याशङ्क्य आह * यद्येष हीति * कर्तृव्यतिरिक्तापूर्वानभ्युपगमेनास्मत्पक्षे कर्तुरेवोपकारकत्वात्तस्य च स्थायित्वेनाविकृतत्वात्कालभेदे ऽप्यन्यथात्वाभावात्प्रसङ्गसिद्धिरविरुद्धेत्याशयः । अतिक्रान्तयागकर्तृपक्षोक्तदोषाः कर्मविनाशस्यापि साधनत्वपक्षे ऽतिदेष्टव्या इत्याह * एतदिति * कथमित्यपेक्षायामनुभाष्यपूर्वकमतिदिशति * यस्यापि चेति * हित्यर्थे चशब्दः एतदेव दृष्टान्तेनोपपादयति * न-

१७०॥ था हीति * महारोगापेक्षया रोगान्तराणां शुभत्वं विवक्षित्वा शुभाशुभकर्मविनाशाविशेषदृष्टान्तत्वं वाशब्देन रोगानुत्पत्तेरप्युपलक्षणात्प्राक् प्रध्वंसाभावाविशेषदृष्टान्तत्वं विनाशानां तु वैचित्र्याभ्युपगमे वस्तुन्येव वैचित्र्यदर्शनात् वस्तुत्वापत्तेः । कर्मानन्तरभावितत्सम्बन्धिवस्त्वन्तराभावान्नामान्तरेणापूर्वमेव स्यादित्याह * यदि त्विति * श्रुतहानाश्रुतकल्पनाप्रसङ्गश्चास्मिन्पक्षे स्यादित्याह * न चेति * श्लोकं व्याचष्टे * यजेतेति * यद्वा यथाश्रुतस्वर्गस्यागेनाश्रुतस्वर्गाभावस्य फलत्वकल्पनं न युक्तं तथा श्रुतयागत्यागेनाश्रुतस्य यागाभावस्य साधनत्वकल्पनमपीति वक्रोक्त्या दर्शयन् पूर्वार्द्धं व्याचष्टे * अथ चेति * ननु यथापूर्वसाधनत्वकल्पने ऽपि न या-

गसाधनत्वाद्धानिस्तथा यागाभावस्यापि साधनत्वेन तद्धानिरित्याशङ्कानिरासार्थत्वेनोत्तरार्द्धं व्याख्यातुं पूर्वोक्तमेवापूर्वपक्षे श्रुतहान्यश्रुतकल्पनाप्रसङ्गाभावमाशङ्कापूर्वकं स्मारयति * अपूर्वेति * भावनिरपेक्षस्याभावस्य साधनत्वादर्शनाच्च विनाशस्य साधनत्वं सम्भवतीत्याह * न चेति * ननु विहिताकरणस्याभावरूपस्यापि प्रत्यवायसाधनत्वस्मृतेस्तत्कालान्यकरणापेक्षत्वे च तस्यौदासीन्यमात्रेणापि प्रत्यवायपरिहारसिद्धेरनुष्ठानानर्थक्यप्रसङ्गादपवर्जनीयस्य निमिषितादेः प्रत्यवायसाधनत्वे विहितानुष्ठानेऽपि प्रत्यवायापत्तेर्विहिताकरणापेक्षत्वे च तस्यौदासीन्यमात्रस्य निमिषितादेः साधनत्वेऽन्वयव्यतिरेकाभ्यामकरणस्यैव साधनत्वापत्तेर्भावनिरपेक्षस्याभावस्य साधनत्वं दृष्टमित्याशङ्क्याह * यदि त्विति * गुर्वोक्तस्नाननुष्ठानेनाहमपराद्धोऽस्मीत्यपराधनिमित्तगुरुकोपदर्शनाद्विहितावश्यभावसद्रूपस्यैव विहितानुष्ठानस्य साधनत्वकल्पना युक्तेत्याशयः * अत एवाचार्यैः *

स्वकाले यदकुर्वंस्तत्करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ॥

इति विहितमकुर्वन्यदन्यत्करोतीति वदद्भिर्विहिताकरणनिमित्तस्यान्यकरणस्य प्रत्यवायनिमित्तत्वाभिधानादवज्ञायामेव वाकरणस्य निमित्तत्वोपपत्तेर्विहितावज्ञानमेव प्रत्यवायहेतुत्वेनोक्तम् । नाभावेनेव अन्यतरस्यैवशब्दोत्कर्षेण केवलस्य हेतुत्वं निरस्तमप्येवं च विहितस्याननुष्ठानान्नरः पतनमृच्छतीति स्मृतिरनुगृहीता भवति निमिषितादेस्तु हेतुत्वे विहिताकरणस्य किंचित्करत्वाभावात्स्मृतिबाधापत्तिः एवं यच्च सदेवतामपठ्यादि योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोतीति यावदपराधशब्दैरपराधाभिधानात्तस्यैव प्रत्यवायहेतुत्वेऽवसीयते निमिषितादेस्तु हेतुत्वं निष्प्रमाणकमेव तस्मादपराधापराधविशेषरूपस्य भावान्तरस्य तत्रसम्भवान्न तुच्छस्य कचिद्धेतुता दृष्टेति ग्रन्थार्थः । यच्चापूर्वेऽस्य दोषस्य तुल्यतोक्ता तामनुभावपूर्वं परिहरति * यत्त्विति * यच्चापूर्वस्य कालानन्तर्गतिरुक्ता तामप्यनुभावपूर्वं परिहर्तुमाह * यस्त्विति * अनन्तरफलत्वेऽप्यनेकाङ्गप्रधानसाहित्यमपूर्वं विना न सम्भवतीत्याशयः स्वर्गस्य ज्वरादिदुःखाननुविद्धकेवलसुखात्मकत्वेन परलोकानुभवनीयत्वेन च पश्चाद्भाष्यकृता वक्ष्यमाणत्वात्तत्प्रतियोगित्वेन नरकस्य सुखाननुविद्धकेवलदुःखात्मकत्वेन परलोकानुभवनीयत्वेन च

१ चेमस्वेति २ पु० पा० । तत्र तस्यौदासीन्यमात्रस्येति नास्ति

नन्वात्माश्रितत्वे ऽपि क्रियायाः क्षणिकत्वेनोत्पन्नमात्रविनाशिन्यास्तेनोत्पद्यविनष्टत्वात्तस्यारम्भकत्वं ऽपि द्वितीयेनैव न्यायेनापूर्वारम्भकत्वं न सम्भवतीत्याशङ्क्याह * अतश्चेति * आशुतरविनाशः क्षणिकत्वं नोत्पन्नविनाशित्वमित्याशयः । नन्वात्माश्रितत्वे ऽपि क्रियाया स्वसमवेतापूर्वाख्यशक्तिजनकत्वानभ्युपगमे क्रियापूर्वयोः काष्ठज्वलनवद्धर्मधर्मिभावाभावेनात्यन्तभेदापत्तेः श्रुतक्रियासाधनत्वानिर्वाहप्रसङ्गात् स्वसमवेतापूर्वजनकत्वस्य बलादभ्युपगमनीयत्वापत्तेः क्रियाविनाशे तदाश्रितस्यापूर्वस्यापि काष्ठविनाश इव ज्वलनस्य विनाशे फलोत्पत्तिकाले यावदनवस्थानाच्छ्रुतसाध्यसाधनसम्बन्धोपपादकत्वं न सम्भवतीत्याशयेनाशङ्कते * कथमिति * द्रव्यमेव विशिष्टशक्त्युपेतं व्यापारशब्दवाच्यं भवतीत्यनेन न्यायेन क्रियात्मनोरत्यन्ताभेदाभावेनात्मसमवेतस्यापूर्वस्य क्रियातो ऽत्यन्तभेदाभावात् साध्यसाधनसम्बन्धोपपादकत्वं सम्भवतीत्याशयेन परिहरति * अत्रेति * शङ्कापरिहाराशयौ प्रकटयति * कथमिति * आत्मसमवाये कर्मशक्तिरयं विरुध्यतइत्याशङ्कार्थः । किं चाग्न्यादेरप्यदृष्टे ऽप्यतिशयस्य दाहादिकार्यसाधकस्योपपादकत्वमेवाग्न्यादिशक्तित्वं आग्न्यादिसमवेतत्वं भास्वरत्वादेरग्न्यादिसमवेतत्वेनापि तच्छक्तित्वाप्रसिद्धेः स्मृतिहेतौ च संस्कारे स्मर्त्रात्मसमवेते ऽपि संविदसामर्थ्यभाविनः स्मरणादित्यादिप्रयोगादनुभवशक्तित्वप्रसिद्धिरतो ऽन्यसमवाये ऽपि कर्मशक्तित्वाविरोध इत्याह * अपि चेति * लोके व्याख्येय * यदेति * नैतावता कर्मशक्तित्वहानिरिति शेषः । यच्चारादुपकार्यङ्गापूर्वाणां प्रधानसम्बन्धाभावे तदुपकारित्वं न सम्भवति प्रधानसाधनद्रव्यसमवायात्तु प्रधानसम्बन्धाभ्युपगमे वपनादिवत् सन्निपत्योपकारित्वापत्तेरारादुपकारित्वं विरुध्येतेत्युक्तं तदपि निरस्यति * तथेति * वपनादेरात्मनेपदेन लिङ्गेन वा वपनाद्याश्रयभूतप्रधानसम्बन्धियजमानशेषत्वात् सन्निपत्योपकारित्वं ज्ञातं तेषां त्वाश्रयशेषत्वाभावात् सन्निपत्योपकारित्वानापत्तेर्नारादुपकारकत्वविरोध इत्याशयः । यत्त्वङ्गानां यजमानशेषत्वाभावात् सन्निपत्योपकारित्वाभावे ऽपि अङ्गापूर्वाणां यजमानाश्रितत्वाभ्युपगमे ऽपूर्वस्य योग्यतालक्षणत्वाद्यजमानेन च फलभोक्तृत्वस्यैव योग्यतापेक्षणात्फलभोक्तृत्वयोग्यतापादकत्वात् प्रधानवत्पुरुषार्थत्वापत्तेः कर्माङ्गत्वम् * द्वितीयेत्युक्तम् * तदप्यनुभाषणपूर्वकं निरस्यति * यद्यपीति * तदुद्देशविधिविषयत्वलक्षणतादर्थ्यहेतुकत्वाच्छेषत्वस्याङ्गानां च पुरुषोद्देशेनाविधानात्प्रधानस्य च फलसाधनत्वयोग्यताया-

येन योग्यत्वलक्षणाविरोधात्पुरुषाश्रितत्वमात्रेण तच्छेषत्वं वाच्यं न च तत्सम्भवतीत्याशयः। आश्रितत्वस्य शेषत्वाहेतुत्वं दृष्टान्तेनोपपादयति * राजार्थेति * राजशेषभूतस्याङ्गानुलेपस्योपयिकमित्यर्थः। न च पतनप्रतिबन्धलक्षण एवाश्रयाश्रयिभावो विवक्षितः येनामूर्त्तानां न स्यादित्याह * न चेति * नन्वापाद्युपकार्यङ्गापूर्वाणामात्माश्रितत्वात् स्थायित्वेनोपकारित्वोपपत्तावपि सन्निपत्योपकार्यङ्गापूर्वाणां संस्कार्यव्रीह्यादिनाशे नाशात् स्थायित्वाभावेनोपकारित्वं न सम्भवतीत्युक्तमत आह * यद्यपीति * व्रीहिसमवायिनो ऽप्यपूर्वस्य तन्नाशे नाशात्तण्डुलादौ समवायासम्भवमाशङ्क्य व्रीह्यादिद्रव्यस्यैवावस्थाविशेषस्तण्डुलादिरूप इत्युक्तं न व्रीह्यादिरूपं संस्कार्यं किं तु तदुपलक्षितं प्रधानापूर्वसाधनीभूतं द्रव्यं तच्चावस्थाभेदे ऽप्याहवनीयप्रक्षेपात्प्राङ् न विनश्यतीत्याशयः। यत् व्रीहिसमवाय्यपूर्वं तत्तण्डुलादिषु व्रीह्यादिद्रव्यावस्थासु स्व[illegible]धानपर्यन्तं गतमिति तच्छब्दाध्याहारेण योज्यम्। ननु प्रदानपर्यन्ते गमने ऽपि तस्याहवनीयप्रक्षेपनाशे सति तद्गतस्यापूर्वस्यापि ना-[illegible]त्याशङ्क्याह * तत्रापीति * प्रोक्ष- [illegible] प्रधानस्य स्वापूर्वनिष्पादक- [illegible]णादिजनितमपूर्वं नियतमे-

भवति। ननु प्रधानापूर्वमनिष्पाद्यैवोक्तम्। ननु क्रियाश्रयैव च स्थितेति यागादेः प्रधानस्यात्मनि समवायाभिधानात् प्रक्षेपादेश्च द्रव्यदानचलनहेतुभूतशरीरचलनात्मकत्वादात्मन्यसमवाये ऽपि प्रयोजकव्यापारत्वात् शरीरसमवेतत्वेन द्रव्यदानसमवायाभावात्तद्गतस्य प्रोक्षणादिजन्यस्यापूर्वस्य प्रधानसम्बन्धानुपपत्तेः कथं तदीयापूर्वनिष्पत्तौ तद्व्यापार इत्याशङ्क्य * तत्रापीत्युक्तम् * देवतोद्देशद्रव्यत्यागात्मकप्रयोजकव्यापाररूपांशद्वययुक्तस्य यागाख्यप्रधानस्य याथमाद्युद्देश्यदेवतास्याज्यद्रव्ययोः प्रयोज्ययोर्व्यापारौ प्रयोजकव्यापारान्यथानुपपत्तिकल्पितौ तयोर्मध्ये यस्त्याज्यस्य द्रव्यस्य त्यागो प्रयोजकव्यापारं प्रति प्रयोज्यस्य व्यापारस्त्यागद्वारा प्रधानस्योपादानेन द्रव्यदाने प्रधानस्य समवायाद्धोमाख्यस्य च प्रधानस्य देवतोद्देशद्रव्यत्यागप्रक्षेपात्मकप्रयोजकव्यापाररूपांशद्वययुक्तस्य त्यागप्रक्षेपौ प्रयोजकव्यापाररूपांशौ प्रति प्रयोज्यस्य त्याज्यस्य प्रक्षेप्यस्य द्रव्यस्य यौ व्यापारौ त्यागप्रक्षेपद्वारेणांशौ ताभ्यां तद्द्रव्यप्रदाने प्रधानस्य समवायादित्यर्थः। उच्यते च हुतस्य पुरोडाशस्य यागसाधनत्वाद् द्रव्यदाने यागस्य समवायो भाष्यकृन्मतेनोक्तः

ननु सर्वाङ्गानुष्ठानोत्तरकाले समस्ताङ्गापूर्वाणां युगपत्प्रधानोपका-
रसाधनत्वस्य वक्ष्यमाणत्वात्प्रधानापूर्वनिष्पत्तौ व्यावृत्त्यनिवृत्तिरयु-
क्तेत्याशङ्कानिरासायैवकारः आरादुपकार्यङ्गविषयोऽसौ समस्तश-
ब्द इत्याशयः। सन्निपत्योपकार्यङ्गापूर्वाणां प्रधानापूर्वनिष्पादनमात्रेण
पर्यवसानं तेषामर्थाधिकरणे वक्ष्यमाणया व्यवस्थयोपपादयति *
तेनैव चेति * यच्च युगपत्प्रयोगवचनग्रहणावगताङ्गापूर्वाणां प्र- ३७३।
धानोपकारे प्रधानापूर्वाणां च फले यौगपद्यमन्योन्यसम्बन्धाभावा-
न्न सम्भवतीत्युक्तम्। तदपि निरस्यति * यथैव चेति * यथाङ्गापूर्वा-
णां प्रधानापूर्वाणां चान्योन्यसम्बन्धस्तथारादुपकार्यङ्गापूर्वाणामे-
कात्मापूर्वाणामन्योन्यसम्बन्धाद्युगपत्प्रधानोपकारलक्षणकार्यारम्भ-
सिद्धिःप्रधानापूर्वाणामन्येषामन्योन्यसम्बन्धात्फलाख्यकार्यारम्भ-
सिद्धिरित्यर्थः। ननूक्तेन न्यायेनाङ्गप्रधानापूर्वाणां व्याप्यैव सम्ब-
न्धे च सम्भवत्यपि प्रधानापूर्वनिष्पादनमात्रेणाङ्गापूर्वाणां विनाश-
स्योक्तत्वात्। प्रधानापूर्वाणां क्रमोत्पत्तित्वेनाङ्गापूर्वाणां प्रधानसम-
कालानां क्रमवर्तित्वापत्तेः। प्रागूर्ध्वं चोत्पद्यमानानामत्यन्तविप्रकर्षा-
त्साहित्यानुपपत्तेर्न युगपदुपकारः सम्भवतीति शङ्कते * कथं पु-
नरिति * सन्निपत्यारादुपकारिणां सर्वेषां प्रधानापूर्वनिष्पत्तौ
व्यापारमात्रमङ्गाथाभिमतमभ्युपगम्यैव तावन्निष्पन्नानामङ्गापूर्वाणां
स्वरूपेणानागतानां च कर्त्तव्यत्वावधारणेन यौगपद्यमुपपादयति
* केचित्तावदाहुरिति * समस्ताङ्गोपेतप्रधानप्रयोगमक्रमादागा-
मिनामपि तादृश्यावस्थायाः प्रचलितत्वात्प्रधानसहायतोपपन्नेत्य-
र्थः। न त्वेवं सर्वाङ्गापूर्वाणां यौगपद्योपपत्तावपि एकप्रधानापूर्व-
निष्पत्तौ विनष्टत्वात्प्रधानान्तरसहकारित्वानुपपत्तेरेकैकमिति वी-
प्सा न युक्तेत्याशङ्क्याह * आतिथ्येति * यद्यातिथ्यायां बर्हिस्त-
दुपसदां तदग्नीषोमीयस्येति श्रुतेः साधारणार्थतया चतुर्थे वक्ष्यमा-
णत्वादातिथ्यायामुपात्तस्य बर्हिषस्तत्समासाद्यपि नापवर्ग इति च-
तुर्थसिद्धो दृष्टान्तः अनागतानामसत्त्वादप्युपकारित्वं सम्भवती-
ति शङ्कते * कथं पुनरिति * स्वरूपासत्त्वेऽपि कर्त्तव्य-
त्वावधारणमात्रेण हेतुतान्यथापि दृष्टत्वादुपपन्नेति परिहरति
* एकान्तेति * नन्वेवं सत्युत्पत्त्युत्तराङ्गानुष्ठानवैयर्थ्यं स्यादिति शङ्कते
* ननु चेति * समस्ताङ्गोपेतप्रधानानुष्ठानोपदेशान्यथानुपपत्त्यो-
त्तराङ्गानुष्ठानसहकृतानां प्रधानापूर्वाणां फलाएवैव निष्पादकत्वावग-
तत्तदकरणे सहकार्यभावे निष्पन्नान्यपि प्रधानापूर्वाणि स्वकार्यं

१ तथाभवेन सम्बन्ध इति कतीये।

द्याधिकरणसूत्रावयवोक्तमपर्यायविधानमनुकीर्तितं व्याख्यातुम् *
युगपदित्युक्तम् * आरादुपकार्यङ्गापूर्वाणामखण्डोपकारनिष्पत्तेः
प्रागविनाशाद्यौगपद्यं सम्भवतीति सकलस्य तात्पर्यं कः पुनर्निष्पा-
दनातिरिक्तः प्रधानापूर्वाणामारादुपकार्यङ्गापूर्वैरुपकार. क्रियतइत्य-
पेक्षायां फलापूर्वोत्पादनयोग्यताधानात्मकमुपकारं दर्शयितुमाह-
* नत इति * ननु फलापूर्वस्यापि संस्काररूपत्वाभ्युपगमात्सं-
स्कारस्यानुभवादिजन्यस्य कालविप्रकर्षेण क्षीणत्वस्य चात्यन्तं ना-
शस्य चोपलम्भादपूर्वान्तरवत्फललाभात्प्रागपि नाशापत्ते. साध्यसा-
धनसम्बन्धोपपादकत्वं न स्यादित्याशङ्क्याह * तस्त्विति * फल- ३७४।१
लाभार्थत्वेनैव तस्य कल्पितत्वात्तत्पर्यन्तं तस्य स्थायित्वमक्षीणत्वं
च कल्पितमित्याशयः। ननु यत्र प्रतिबन्धकादिवशादनन्तरं फलं नो-
त्पद्यते तत्रास्तु नाम फलापूर्वकल्पनं यत्र त्वैहिकत्वात् पुत्रादिवद्-
दृष्टकारणानपेक्षत्वादनन्तरमप्युत्पत्तुं शक्यं प्रतिबन्धकाभावादनन्त-
रमप्युत्पद्यते तत्र तत्कल्पनं विनापि साध्यसाधनसम्बन्धोपपत्तेर-
पान्तरापूर्वद्वारा चाङ्गप्रधानसाहित्योपपत्तेर्यस्य च शब्दस्यार्थेन
फलं साध्यते तेनापूर्वं कृत्वा नान्यथेति फलापूर्वस्य सार्वत्रिकत्वा-
भिधानमयुक्तमिति कोमलोक्त्या शङ्कते * यदि पुन रिति * त-
थापीत्यर्थे ततो ऽपीत्युक्तम्। अनन्तर फलोत्पत्तावप्यपूर्वं विना चिर-
कालोपभोगासम्भवस्योपभोगश्चिरेणैषां न निमित्ताद्विना भवेदि-
त्यत्रोक्तत्वात्कल्पनीयं फलापूर्वमिति परिहरति * बाढमिति *
ननु पूर्वस्य चिरकालस्थायित्वाभ्युपगमे अङ्गापूर्वाणामेव साक्षात्प्रधा-
नोपकारकत्वोपपत्तेरखण्डोपकारापूर्वकल्पनं व्यर्थं प्रधानापूर्वाणां च
साक्षात्फलजनकत्वोपपत्ते. फलापूर्वकल्पनं व्यर्थमित्याशङ्कते *अथे-
ति * प्रात्यात्मिकशब्देन प्रत्येकमेकैकाङ्गजन्यतोक्ता साक्षात्तेषां ज-
नकत्वसम्भवे ऽपि कल्पकक्रमानुरोधेनैवङ्कल्पितमिति परिहरति
* सत्यमिति * निषेधार्थं न हीत्यखण्डं पदं श्लोके व्याचष्टे * प्र-
धानानामिति * उत्पत्तिवाक्यावगतभेदानामपि प्रधानानां फला-
न्वयात्प्रागङ्गानां च प्रधानोपकारान्वयात्प्रागपूर्वानपेक्षत्वात्तदन्वय-
काले च यौगपद्यप्रतीतेर्भिन्नापूर्वकल्पनाहेत्वभावादेकमेव फलाप-
र्वमुपकारापूर्वं च प्रतीयते प्रयोगकाले तु क्रमप्रतीतेः स्वरूपतः सा-
हित्यायोगात्साहित्यसम्पत्त्यर्थं प्रात्यात्मिकानेकापूर्वकल्पनेत्यर्थ. ।
नन्ववद्यकल्प्यैः प्रात्यात्मिकापूर्वैरेव साहित्यवत्फलसाधनोपकारा-
न्वययोरप्युपपत्तेर्गौरवापादिका प्रागेकापूर्वकल्पना न युक्तेत्याश-
ङ्क्याह * सर्वत्र चेति * प्रात्यात्मिकापूर्वाणां साहित्यासिद्ध्यर्थं क-

दिपनत्वात्कार्यान्तरोपयोगित्वं न सम्भवतीत्याशयः । मौढ्या तु
तेषां कार्यान्तरोपयोगित्वे ऽप्यदोष इति प्रागुक्तं तस्मात्फलापूर्वमेव
समस्तफलोपभोगपर्यन्तं स्थायि कल्प्यते तदुत्पादनमात्रेण तु प्रधाना-
पूर्वाणां नाशः । आरादुपकार्यङ्गापूर्वाणां प्रधानोपकारोत्पादनेन सा-
मवायिकाङ्गापूर्वाणां प्रात्यात्मिकप्रधानापूर्वोत्पादनेनेति व्यवस्था सि-
द्धेति तात्पर्यार्थः । यत्त्वस्मिन्पक्षे पौर्णमास्यां निष्पन्नानामङ्गापूर्वाणां
दर्शप्राह्मपनर्पणानन्तरमुपकारोत्पादनेनापवर्गाभिधानात्तावत्कालं
स्थायित्वमुक्तं तदमावास्यायां पुनरननुष्ठेयत्वापत्त्या दूषयति
* के चित्त्विति * कौ ऽननुष्ठेयत्वापत्तौ विरोध इत्याशङ्क्य
* आह्वेयश्चेति * प्रधानाहुत्योर्वसङ्गत्वादङ्गाहुतीर्विना न प्रयो-
गसङ्गता सम्पद्येतेत्याशयः । पौर्णमास्यां पौर्णमास्या य-
जेतामावास्यायाममावास्ययेति पौर्णमास्यमावास्याशब्दयोस्त्रिकयोः
करणत्वप्रतीतेस्तस्य च साधकतमत्वलक्षणत्वात्समर्थत्वाति-
शयस्यापेक्षितत्वेनाङ्गसाहित्यं विनानुपपत्तेरङ्गसाहित्यावगमात्तस्य
चानुपादेयकाले प्रत्युपादेयत्वेन विवक्षितत्वादेकैकस्य त्रिकस्य फल-
साधनत्वाभावेनानुपकार्यत्वात् त्रिकद्वयस्यैकस्मिन्काले ऽनुपप-
त्तेरुपकर्तुमशक्यत्वादुपकारानिष्पत्तौ चाकृतकार्यत्वेनाङ्गापूर्वाणा-
मपवर्गाभावे ऽपि वचनबलादिः प्रयुक्तानामुपकारकत्वाकल्पनया
त्वनुष्ठाने सेत्स्यतीत्येकदेशिनां दूषणपरिहाराभिप्रायमाशङ्क्ते *
अन्ये त्विति * यैः प्रयोगद्वयान्ते ऽङ्गापूर्वाणामपवर्गः प्रागुक्तस्त एवा-
न्यशब्देन परामृष्टाः तैः सम्मार्गादिवदिति शास्त्रस्य विधानात् । सकृत्प्र-
युक्तानामेवोपकारकार्योपपत्तेरपवर्गाभावे पुनः प्रयोगानर्थक्या-
पत्तेरपरिहार्यत्वात् स्वमतेन पौर्णमास्यां निष्पन्नानामङ्गापूर्वाणां पौ-
र्णमास्यामेव प्रधानत्रयसमुदायापूर्वनिर्वृत्तावपवर्गं दर्शयितुमाह * यथ
वेति * यथा प्रधानापूर्वत्रयस्यैकसमुदायापूर्वजनकत्वावगतिरिति वे-
शब्दयां पौर्णमास्येति तृतीयाश्रुत्या करणत्वावगमादित्युक्ते ननु फला-
पूर्वमेव प्रति करणत्वं भविष्यतीत्याशङ्क्य समर्थः पदविधिरिति पद-
मात्रविधेः सामर्थ्याधीनत्वस्मरणात् सापेक्षत्वे च सामर्थ्यविघा-
तापत्तेर्विभक्तिश्रुत्यामावास्यानिरपेक्षयावगमात्पौर्णमास्यसहितामावा-
स्यया स्वार्थं समुदायापूर्वं करोतीत्युपकारनैरपेक्ष्येणोक्तं च । अङ्गापेक्षा
तु करणश्रुत्याक्षिप्यमाणेन सामर्थ्यविधानेनापि सांनिध्येन सूचितम् ।
यथा साङ्गा पौर्णमासी स्वार्थं समुदायापूर्वं करोति अमावास्याप्यमावा-
स्ययेति करणविभक्तिश्रुतेरङ्गसहिता स्वार्थं समुदायापूर्वान्तरं करोती-
ति योगपद्यादिरूपमावास्या स्वसमुदायसहितस्य पौर्णमास्यसमु-

दायस्य दर्शपूर्णमासाभ्यामिति करणविभक्तिश्रुतेः स्वार्थफलापूर्वसाधनत्वावगमात्समुदायद्वयस्य चापूर्वं विना साहित्यानुपपत्तेः । समुदायापूर्वजनकत्वावगतिरित्येवं व्याख्यायते ततः साहित्यस्य द्वन्द्वावगम्यत्वाद्विभक्तिगम्यत्वाभिधाने तावद्युक्तं समुदाययोश्च फलसाधनत्वाभ्युपगमे पौर्णमास्यधिकरणे तन्निरासाद्दर्शे ऽपि विरुध्येत अङ्गापूर्वाणां प्रधानोपकारापूर्वोत्पादनमात्रेण निवृत्तिसूचनार्थम् * पूर्वोक्तेनैवेत्युक्तम् * पौर्णमासीकालीनेष्वङ्गापूर्वेषु पौर्णमास्याख्यप्रधानत्रयोपकारं कृत्वा निवृत्तेष्वङ्गापूर्वजनितानुग्रहविशिष्टं पौर्णमास्याख्यप्रधानापूर्वत्रयम् एकं समुदायापूर्वं कृत्वा अपवृज्यत इत्यर्थः । फलापूर्वस्य तर्हि कथं निवृत्तिरित्याशङ्क्याह * तत्पुनरिति * स्वाङ्गापूर्वजनितानुग्रहविशिष्टामावास्याख्यप्रधानापूर्वत्रयजन्यतामावास्याख्यसमुदायापूर्वस्यैव शब्देनोक्ता समुदायापूर्वद्वयाभ्युपगमस्य प्रकृतोपयोगमाह * अत एवेति * समुदायापूर्वद्वयाभ्युपगमे पौर्णमास्याख्यसमुदायापूर्वजननार्थं पौर्णमास्याख्यप्रधानापूर्वत्रयेण स्वाङ्गापूर्वजनितोपकारापेक्षणादुपकारनिवृत्तौ च कृतार्थतया पौर्णमासीनिष्पन्नाङ्गापूर्वेनाशादमावास्यायां पुनः प्रयोगानर्थक्यदोषाभावः । तदनभ्युपगमे त्वकृतार्थत्वात्पौर्णमास्यां निष्पन्नानामङ्गापूर्वाणां नाशायोगात्पुनः प्रयोगानर्थक्यदोषो दुःपरिहर इत्यर्थः । यद्यप्यपूर्वस्य कर्मभिरुत्पत्तिरभिव्यक्तिर्वेति विकल्पेऽत्पत्तिरपि युगपत्तावन्न सम्भवति क्रमवर्तित्वात्कर्मणामित्युक्तं तदप्यपूर्वद्वारा कर्मणां यौगपद्योपपादनात्सुपरिहरमित्याह * एतयैवेति * क्रमवर्तिनामपि कर्मणामवान्तरव्यापारयौगपद्यद्वारा युगपत्परमकार्यारम्भकत्वं दृष्टोदाहृतेन दृष्टान्तेनोपपादयितुमाह * आह चेति * यावत्तत्त्वयथाध्ययनरूपेण क्रमवर्तिनीभिरावृत्तिभिरभ्यासकर्मभिर्यथावान्तरसंस्कारयौगपद्यद्वारा वाक्यसमुदायात्मकाध्यायग्रहणसामर्थ्यरूपः परमसंस्कारो युगपद्भवति तथेदमपीति श्लोकार्थः । यच्चानवयवत्वा- ३७५।।

कल्पनापत्तेः । किं त्ववयवसन्निवेशानात्मकतेत्याशयः । नन्वपूर्वस्यावयवसन्निवेशानुपपत्तेर्निरवयवत्वं भविष्यतीत्याशङ्क्याह * अनयैवेति * कारणायौगपद्याद्युगपदुत्पत्त्ययोगाक्रमोत्पत्तिप्रसङ्गेनास्याश्च निरवयवत्वे ऽनुपपत्तेः । सूक्ष्मदर्शनायोग्यावयवसन्निवेशरूपेणापूर्वं

